(श्रीः)

# खण्डनखण्डखाद्यम्

नाम

## अनिर्वचनीयतासर्वस्वम्,

विचक्षणचक्रचूडामणिसमर्चितचरणाम्बुजकवितार्किकसार्वभौम-

## श्रीयुतश्रीहर्षप्रणीतम्,

तार्किकशिरोमणिश्रीमच्छङ्करमिश्रप्रणीतव्याख्यासनाथम्,
साधुप्रवरश्रीमन्मोहनलालवेदान्ताचार्योपनिबद्धया
उपवृत्त्या संवलितम्,

वेदान्ताद्युपाध्यायश्रीमत्कुलयशस्विशास्त्रिणा
संस्कृतम्।



काश्याम्
मेडिकल् हाल् नामकमुद्रालये मुद्रयित्वा प्रकाशितम्।

सं० १९४४-१८८८ ई०।

 [मूल्यम् ७॥)

१२६

( श्रीशः )

( "इदंप्रथमसंभवत्कुमतिजालकूलङ्कषा
मृषामतविषानलज्वलितजीवजीवातवः ।
चरन्त्यऽमृतमचरं यतिपुरन्दरस्योक्तय-
श्चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥
कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः" ॥ )

## ॥ भूमिका ॥

इह खलु निसर्गतएव प्राणिमात्रमिष्टमभिलाषुकञ्चाऽनिष्टं व्युदसिसिषु च भवतीतीष्टाऽनिष्टप्राप्तिपरीहारोपायप्रकाशनैदम्पर्य्येण भगवानाम्नायश्चातुर्वर्ण्यचातुराश्रम्यप्रभृतिविभागप्रविभागभक्तान्यभ्यु-दयसाधनानि समष्टिव्यष्टिफलानि नानाविधानि विदध,दभिदधौ निःश्रेयससाधनमपपुनर्बाधं प्रत्यगात्मपरमात्मयथात्म्यावबोधं प्रवि-रलेभ्योऽपि धीरधौरेयेभ्यः । 'क्रिया हि नाम विकल्पनाऽऽस्पदं भवति, नतु वस्त्वि'त्येकरूपमप्याऽऽत्मयाथात्म्यमतिलौकिकतया च, पर-म-तमगहनमूर्त्तितया च, पुरुषबुद्धिवैविध्याच्च भगवल्लीलावैभवमिवे-यत्तया चेदृत्तया च दुष्परिच्छेदमापेदे परःशतरूपताम् । तथाहि, आत्मनः कर्तृत्वभोक्तृत्वादिकमातिष्ठन्ते तार्किकाः; भोक्तृत्वमेव तस्य, न परं कर्तृत्वमपीति संगिरन्ते कपिलकमलासनाद्यनुगा-

मिनः । आसतां वा तावत्परेषां कथाः; औपनिषदा एव परस्परविलक्षणनानाविधसिद्धान्तेषु समासते समर्पितसमादराः । नचैतेऽर्वाञ्च एव राद्धान्ताध्वभेदाः, महर्षीणामेव तेषु तेषु विशेषेषु वैशेष्यात् (१)

तदेवमतितरामगाधं विश्वपारदृश्वनामपि मतिविकल्पकल्पनक्षममौपनिषदहार्दं मीमांसामास निबबन्ध च ब्रह्ममीमांसासमाख्यया "अथातो ब्रह्मजिज्ञासे"त्यादिचतुर्लक्षण्या भगवतो वासुदेवस्य ज्ञानावतारः खल्वज्ञानसन्तमसापसारणविभावसुर्महर्षिव्यूहशिखाशेखरसमासक्तस्वर्गङ्गाोदबिन्दुसन्दोहप्रोन्मृष्टचरणनखरशिखरस्तत्रभवान् भगवान्बादरायणद्वैपायनापरपर्यायः कृष्णः पाराशर्यः । भगवान् बोधायनस्तु ब्रह्ममीमांसायाश्चोपनिषदां च भगवद्गीतोपनिषदश्च परमगहनैदम्पर्यमाविश्चिकीर्षन् प्रणिनाय वृत्तिपदव्यपदेशभाञ्जि भाष्याणि । तस्य च महर्षेर्मतं तत्र तत्र शाङ्करभाष्ये पूर्वपक्षत्वेनोपन्यस्तत्वाद्रामानुजभाष्ये च राद्धान्तविधया भूयःप्रतिष्ठापितत्वात्समस्ति स्म विशिष्टाद्वैतमिति नो खलु परोक्षमिव परीक्षकाणाम् ।

तदेतदाकल्पाऽऽरम्भोद्भूतानवरतप्रततानवच्छिन्नाऽऽर्षसंप्रदायपारम्परीपरिप्राप्तौपनिषदहार्दसर्वस्वभूतं वृत्तिकारमतं भगवद्भिष्टङ्कद्रमिड़गुहदेवादिमुनिभिः प्राग्भिराचार्यैरारक्षितं श्रीभाष्यकृता च प्रोज्जीवितमद्यापि विद्योतमानमवगाहते यद्यपि प्रतीपतां निर्विशेषाद्वैतवादस्य,(२) ततोऽपि श्रीमन्तः शङ्कराचार्या युक्तिवाचोयुक्तिपथ—

(१) यथा चायमर्थस्तयोदीच्यमीमांसायां शास्त्रकारेण वाक्यान्वयाद्यधिकरणेषूपनिबद्धो, न वा परोक्षइव नानौपनिषददर्शनाकरपरिशीलनशीलशालिनामिति नेह दीर्घमुपलीयतया प्रतायते ।

(२) "तत्त्वमसी"तिसद्विद्यायामुपास्यं ब्रह्म सगुणं, सगुणब्रह्मप्राप्तिश्च फलमिति पूर्वाचार्यैर्व्याख्यातम् । यथोक्तं वाक्यकारेण—"युक्तं तद्गुणकोपासना"दिति । व्याख्यातं च द्रमिड़ाचार्येण विद्याविकल्पं वदता—"यद्यपि सद्विद्यानिष्ठः सच्चित्तो न निर्भुग्नगुणगणं मनसानुधावे,त्तथाप्यन्तर्गुणगणामेव देवतां भजते, तत्राऽपि सगुणैव

सुदीर्घपान्थास्तत्प्रातिकूल्यादबिभ्यतो बिभ्रतश्च चरमतात्पर्य,-मपि वितण्डाकथाया(१)न्निर्विशेषवस्तुपरतयैवाऽलीलपन्(२)निसर्गतो-विशुद्धमुग्धमधुरशाश्वतसारस्वतभगवद्वादेशतन्मीमांसादिकं(३)यथा-यथम् । अथाऽप्यस्याद्वैतवादस्य युक्तिप्रायग्रहगृहीतविग्रहतया शाङ्क-भाष्यादेश्च श्रुतिस्मृतिसूत्राद्यनुसारितयैवावश्यमुपनिबन्धनस्या-)ऽऽपतितत्वाच्च नैतावताऽप्यतीवतरामराजताऽद्वैतवादः । अयं हि

...ता प्राप्यत" इति । सच्चित्तः=सद्विद्यानिष्ठः, न निर्भुग्नगुणगणं देवतं मनसाऽनुधा-त्=अपहतपाप्मत्वादिगुणगणं देवताद्विभक्तं यद्यपि दहरविद्यानिष्ठइव सच्चित्तो न ...रेत्, तथाप्यन्तर्गुणगणां देवतां भजते=देवतास्वरूपानुबन्धित्वात्सकलकल्याणगु-णास्य केन चित्परदेवतासाधारणेन निखिलजगत्कारणत्वादिना गुणेनोपास्यमाना-देवता वस्तुस्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यते । अतः सगुणमेव ब्रह्म ...त्रापि प्राप्यमिति सद्विद्यादहरविद्ययोर्विकल्पइत्यर्थः-इति हि भगवन्तो भाष्यकारा-...र्यचरणाः । सुव्यक्तमिदमेवमादिना निर्पीतस्फीतोपनिषद्धार्द्दसुधारसानां यथा ...ल्वनवच्छिन्नः पूर्वोपनिषदाचार्याणां सिद्धान्तः सविशेषब्रह्मवादो, निर्विशेषब्रह्मवादस्तु ...दीयस्वप्नसंभावनायाअप्यनभ्याशमित्यः (दूरतः परिहार्यः) इत्यलं राजपथस्य वाथि-...पलक्षणयेति ।

(१) "अथ साऽविद्याकस्येति । यस्य दृश्यते तस्यैव । कस्य दृश्यतइत्यत्रोच्यते ...विद्या कस्य दृश्यतइति प्रश्नो निरर्थकः । कथम्-दृश्यते चेदविद्या तद्वन्तमपि पश्यसि । ...च तद्वत्युपलभ्यमाने सा कस्येति प्रश्नो युक्तः ( भगवद्गीता १३ अ. क्षेत्रज्ञं चापि मां विद्धी-...स्य शाङ्करभाष्यम् ) इत्यादौ व्यक्तोऽयमर्थो दूरदर्शिनाम् ।

(२) यत्र खलु "सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनात् । व्याख्यातं यैरिदं ...शास्त्रं व्याख्येयं तन्निवृत्तय"इति स्वयमद्वैतवादिनः सन्तोऽपि श्रीभास्कराचार्याः ...वेदान्ताचार्याएते न तु ज्यौतिषिकाः) व्यक्तमुक्तवन्तः सन्ति स्वायमीमांसाभाष्ये । आनन्द-...द्यधिकरणेषु च 'सूत्राणि त्वेवं व्याख्येयानी'त्यादिना विलक्षणलक्षणादिशरणीकार-...सिंचारेण व्याचक्षाणानां श्रीमच्छङ्कराचार्याणां सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रका-...यथास्ते, न खलु तत्परोक्षं दीर्घदर्शिनाम् ।

(३) "न द्वैतं नाऽद्वैत"मित्येवञ्जातीया श्रुतिरेव निर्विशेषाद्वैतं प्रतिषेधति ; तथा 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरएव च" "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः" 'मम साधर्म्यमागताः, सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" असत्यमप्रतिष्ठन्ते जग-...दाहुरनीश्वरम्"-इत्यादिना भगवानपि ; तथा "नाऽभावउपलब्धेः" "हार्दानुगृहीतः ...तताधिकया" "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "एवमप्युपन्यासात्पूर्वभावा-दविरोधं बादरायणः" इत्यादिना शास्त्रकारश्च ॥

(४) "नाऽभावउपलब्धे"रित्याद्यधिकरणेषु शास्त्रेऽयमर्थो यथा, तथा दार्शनिक-...शिरोमणीनां सुव्यक्तएव ।

वादः संभावनातिक्रान्तनिर्विशेषाऽद्वयतत्त्वं प्रतिपादयञ्जनानां मनस्सु सहसा स्खलन्विहस्तोऽप्यनिर्वचनीयतावादेनैव दत्तहस्तावलम्बः प्रतितिष्ठति। नचाऽधिवितण्डं निर्भरवतोऽस्यानिर्वचनीयतावादस्याऽऽगमप्रधानकथासु सुस्फुटमात्मलाभो भवति संभवी । नचाऽनाद्यविद्योच्चावचप्रपञ्चादेः सर्वथाऽनिर्वाच्यतामन्तरेण केवलाऽद्वैतस्वाराज्यसमासादनं संघटतइति केवलाद्वैतवादवदावदो वितण्डाकथां शरणतया साक्षादेव(१)पुरस्कुर्वाणो निखिलसंव्यवहारमूलभूतप्रमाप्रमाणप्रभृतिपदार्थाञ्शास्त्रोपयोगिनस्तिलशस्तिलशः कदलीकाण्डखण्डनसुखं खण्डयन्त्सर्वथाऽनिर्वचनीयतां समष्टिव्यष्टिजगतः प्रतिपादयाम्बभूव खण्डनखण्डखाद्याख्येऽस्मिन्निबन्धे श्रीमाञ् श्रीहर्षक्षकवितार्किकशिरोमणिः।

अयं खल्वनिर्वचनीयतावादो मिथ्यावादिनां बौद्धानां सिद्धान्तसर्वस्वभूतस्तदीयग्रन्थेषु पुरा भृशमभ्युज्जृम्भते स्म । समनन्तरं बुद्धिमद्विद्वन्महेन्द्रश्रीशबरस्वामिकुमारिलभट्टाद्यर्वाचीनमीमांसकधुरीणैः शतधा विज्ञानवादिमते युक्तिकलापैर्निरस्ते, संजातायां च तदीयविरलतायां तदीयेष्वेव पुस्तकेषु यत्र कुत्र चिदुपलभ्यते स्म। अथ समतिक्रामति चिरकालेऽयं खलु महामनीषी स्वोपयोगिनं तं विज्ञाय तदीयपुस्तकेभ्यः प्रायः संकलयां चकार । यथाऽत्र भारते बौद्धानां मतोज्जृम्भणमासीत्तरां, तथा विदुरवैतिहासिकाः, पुराणेष्वपि च पठ्यते,

(१) "नच सौत्रादिलक्षणप्रमाणखण्डनेऽपसिद्धान्तापत्तिः; तादृश्याः सूत्रादिव्याख्यायाः खण्ड्यमानत्वात् । न च वाच्यं लक्षणविशेष-वस्तुव्यवस्थापकप्रमाणविशेषखण्डनपरत्वेन लक्षणान्तरं प्रमाणान्तरं व्याख्यान्तरञ्च प्रसज्यते भवतोऽपीति; वितण्डाकथामालम्ब्य खण्डनानां वक्तव्यत्वात्" इति स्वयमयं ग्रन्थकारः। "उपपादनञ्च स्वपक्षसाधनपरपक्षनिराकरणाभ्यां भवतीति तदुभयं वादजल्पवितण्डानामन्यतमां कथामाश्रित्य संपादनीयम्" इत्यद्वैतसिद्धिकृदपि वैतण्डिकतां स्वस्य रोचयते। एतेनादृष्टाऽश्रुततदीयरहस्यानामज्ञकाणां केषां चित् "वेदान्तिनस्ते कथं स्युर्वैतण्डिकाः। नास्तिकाः खलु वैतण्डिका भवन्ति नाऽऽस्तिकाः" इत्यभिधानं लब्धोत्तरम् ।

यथा बुद्धोऽवतीर्य विज्ञानवादेन जगति जनमनस्सु मोहं कलौ कलयिष्यतीति ।

आसीच्चायं खण्डनकृत् कान्यकुब्जाधीश्वरस्य विद्वद्गोष्ठ्यां समधिकप्रतिष्ठो वरिष्ठ,स्तदस्य समयस्तावदुपरिष्टादष्टशत्याश्चन्तश्च नवमशताब्द्या इतः पुरस्ताद् भवितुमर्हति। तथाहि, "ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरा"दिति त्वयं स्वयमेव विलिखति; तदीदं ह्यस्य विलेखनं स्पष्टमाचष्टे कान्यकुब्जाधीश्वरात्ताम्बूलद्वयाद्युपलम्भस्य परमतमवैदुष्यप्रतिष्ठाहेतुताम्; सेयञ्च तस्य कान्यकुब्जाधीश्वरीयसाम्राज्यमन्तरा नतरां संघटते; यदि हि कान्यकुब्जाधीश्वरो राजान्तरसाधारणएवाऽभविष्य, ततो हि यथैव राजान्तराणि, तथैवैकः कान्यकुब्जाधीश्वरोऽपीति ततस्तदुपलम्भः किमिव नाम चमत्कारकरोऽभविष्यत्; कथं नाम चारोह्यदीदृत्तस्य लोकोत्तरकवेः प्रत्यभिज्ञाबहुमानवाचोयुक्तिपदवीम्; तथात्वेऽपि चैवंविलेखनमस्य विद्वन्मणेर्व्यक्तं स्थले जलजबीजारोपणं स्यात् । तत्सिद्धं स कान्यकुब्जाधीश्वरस्सम्राडास्त । नच कान्यकुब्जाधीश्वराणां साम्राज्यमितोऽष्टशत्याः, परं, पुरस्तादेवाऽस्तेत्यस्याऽपि सिद्धा तत्कालीनता ॥ किञ्च, नैषधीयचरितेऽस्ति लिखितं खलु—

"काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भि-
र्महाकाव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत्षोडशः" ॥

इति; कश्मीरे महीयांसो विद्वांसो ऽष्टशत्याः पूर्वपूर्वमेवाभूवन्नितोऽपि तत् तथा । अपिच, कश्मीरदेशीयलब्ध(१)वर्णेष्वेतदीयप्रबन्धानां निबन्धनसमसमयं प्रचारश्च सम्मानश्च तन्त्रीवह्नि-

(१) विद्वज्जनेषु ।

गन्त्री(१)विरहिणि तादृशेऽनेहसि गमयति स्फुटम्—यथा, कान्यकुब्जाधीश्वरस्य काश्मीरेश्वरो भवति स्म करदो वा, मित्रं वा, सम्बन्धी वेति । ततश्चाचत्यग्रन्थानां तत्र निर्माणयौगपद्येन प्रसिद्धिरुपपद्यतेतराम् । जयचन्द्रस्य चान्तिमकान्यकुब्जेश्वरस्याष्टौ शतानि समतियन्ति समानाम् । नच ततः परमिह तथाप्रभविष्णवोऽभूवँस्तद्वंश्या, येषां स्यात्काश्मीरादिषु सम्बन्धादिरित्यपि द्रढयत्येवाऽस्य कवेस्तत्कालताम् ॥ किञ्चाऽस्य कवेः कवितानिबन्धेषु वर्णनीयराजानां सन्ति नामानि "साहसाङ्कः, कुन्दः, शिव"—इत्येवमादीनि; तदेतेषां तावदधुनातनक्षत्रनाम्नामिव सिंहोपपदत्वेनाऽनासादनादधिगम्यते यत्तदानीन्नास्ति स्मेह भारतभुवि यवनजनदुश्चरणसञ्चारः, प्रचारश्च सिंहान्तनाम्नामार्यजनतायाम् । यदा हि भारते वितथवाचाटाः प्रविष्टवन्तो यवना,स्तदा तदीयवेश्यापुत्राणामपि, 'खां, शेर, बहादुर, अली' त्येवमादीनुपाकर्ण्य प्रतिक्षणं नामाङ्कान् 'वयमेव किमित्यनुपपदनामानो भवेमे"त्याकलय्य क्षत्रियार्या अपि स्वानि नामानि सिंहोपपदानि धर्त्तुमारभन्तेति ततःप्रभृति क्षत्राणामत्र देशे सिंहपदोपबृंहितानि प्रवर्तन्ते नामानि । यवनजनचरणचारिकायाश्चेह भवन्त्यष्टौ शतकानि शरदां । ततश्च तद्वर्णनीयतत्तद्राजसञ्ज्ञानां कैवल्यं च गुणानुरूपस्वच्छन्दविशिष्टसंस्कृत्रिमत्वं च स्फोरयतस्तदीयसमयस्य यवनानुपस्पृष्टताम्, सा चाष्टशत्यूर्ध्वतामित्यतोऽपि तत्तथा । किञ्चान्यत्, तत्र भवता न्यायाचार्येण श्रीमदुदयनाचार्येण सहास्य कदाचित्समागमो विचारश्च संवृत्तः । उभयोरप्येतयोर्लोकोत्तरोद्दामोदात्तविद्वत्ताशालितया नासीत्तदानीमेव किंचिद्विचारपर्यवसानम् । पश्चात्तु खण्डनकृता 'त्वद्गा-

(१) तार रेल इति प्रसिध्यतः ।

थैवान्यथाका(१)रमक्षराणि कियन्त्यपीत्यादावाचार्यमतखण्डने उपनिबद्धे, श्रीमानाचार्योऽप्यात्मतत्त्वविवेके(बौद्धधिक्कारे) एतन्मतं निरास्यत्तराम्(२) ॥ काव्यप्रकाशकारेणापिसार्द्धमस्य समागममाचक्षते बहुविदः(३)। न्यायाचार्यप्रकाशकारयोश्च नवशतकनैकटिकत्व,मित्यायातममुष्याऽपि तदातनत्वम्। तदेवमादिहेतुभि(४)रैतिहासिकार्थविद्वज्जनावबोधदत्तकरावलम्बैः सिद्धं यथाऽष्टशत्या श्रीपरिष्ठिको नवमशतकोपान्तवर्त्त्ययं महासुधीः ।

अयं च कान्यकुब्जब्राह्मणस्य श्रीहीरविपश्चितस्तनूभवोऽभवत् । यच्च केचन मैथिलाः श्रीहर्षमिश्रइति व्याहरन्तो मिश्रपदव्यामिश्रनामव्यवहारमात्रात्तदीयां मैथिलतां साधयितुं समीहन्ते ; न

(१) कियन्त्यप्यक्षराण्यन्यथाकारं कानिचिदक्षराणि परिवर्त्यत्यर्थः । यथेदमस्ति, तथाऽऽकरएव द्रष्टव्यम् । अत्र खलु खण्डयित्राऽन्यथा कृत्वेत्येव वक्तुं न्याय्यमासीत्, "अन्यथैवंकथमित्थंसु सिद्धाऽप्रयोगश्चे"दित्यनर्थकादेव कृञो णमुल्विधे,स्तथापि प्रमादादित्थं प्रायोजीति विविञ्चन्तु सन्तः । कृत्वेत्याद्यध्याहृत्य वाऽदूषणं प्रमज्यन्ताम् ।

(२) तत्रालीकं विचाराऽसहमनिर्वचनीयं वा यमाश्रित्य जगच्चिन्त्यते, स एव विचारश्चिन्त्यतां कोऽसौ, कीदृशश्चेति । सतर्कं प्रमाणमेव वाक्यारूढमिति चे,त्तच्चेद्विचाराऽसहं, किन्तेन भीतविचारकल्पेनेत्यादिना ग्रन्थजातेन ।

(३) किं गवि गोत्व मुतागवि गोत्वं ; यदि गवि गोत्वं, नहि मयि तत्त्वम् ।
अगवि च गोत्वं यदि भवदिष्टं, भवति भवत्स्वपि संप्रति तत्त्वम् ॥

इति श्लोकमपि तद्विवादविषयकं परिपठन्ति ।

काव्यप्रकाशकारः खलु खण्डनकृता स्वीयं नैषधं कदाचित्प्रदर्श्यमानोऽवोचत् 'हन्त हन्त भवतेदं प्राक् चेद्दर्शितं स्या,त्तर्हि काव्यप्रकाशस्य सप्तमोल्लासे उदाहरणगवेषणे मम न संवृत्तः स्यात्प्रयास' इत्यपि च कथयन्तो भवन्ति वर्षीयांसः । समस्तदोषैकभाजनमिदं भावत्कं काव्यमिति तु तव वक्तुराकूतम् ।

(४) अप्रतिसंख्यसंख्यावत्सार्वभौमस्यास्य समवास्थितिसमयसमन्वेषणसमुद्युक्तैरनेकैर्युरोपीयमहाशयैः The Indian Antiquary ग्रन्थे तत्रतत्रानेकत्र बहोयो बहीयः खलु लिखितमास्ते । तत्र तावल्लेखाः प्रायो विविधसंभावनासमाकुलाः क्वचि,दुत्प्रेक्षामूलकपरस्परखण्डनमयाः क्वचि,त्तत्तन्महोदयमतोपन्यासोत्तराश्च क्वचि,त्तत्पुस्तकनिरुक्तरूपतत्तद्देशदर्शननिर्देशप्रधानाश्च क्वचित्सन्तीति तेष्विदं मदीयमल्पकं चेतो न खलु समश्नुतेऽध्यवसायमिति तानत्र नोपन्यास्यं प्रमाणतया । एवं वासवदत्ताभूमिकायां तत्तदीयस्वतन्त्रपुस्तकेष्वप्येतद्विषयकेषु च बहु गवेषितं दृष्टञ्च, परं नेदं ज्ञानलवदुर्विदग्धं मामकं चेतः प्रापल्लघिमानमित्यनायत्त्या यत्किञ्चित्स्वतन्त्रमिवात्र विषये चेष्टितमनेन, तत्क्षाम्यन्तु दयाविद्रुतोदन्वन्तस्ते सन्तः ।

तन्मिश्रोपपदत्वं समस्तप्रामाणिकजनसुविश्रुतकान्यकुब्जतां(१) प्रत्यावर्तयितुमीष्टेतमाम् । मिश्रोपपदत्वं च मिश्राऽऽस्पदकान्यकुब्जत्वेन प्रथते । जगत्प्रख्याते चैतदर्थे नैव कृतात्मनो मुधा मुधा शङ्कन्त इति न पुनर्विशिष्य तद्धेतूपन्यासादिना विस्तरयामः । भवति चाख्यायिकाऽस्य विद्वन्मणेश्चरिते यथा—"अयमसौ दैववशाद्बाल्यएव भवन् पितृवियोगभाग्जनन्यैव केवलं चिराल्लब्धएकलोयमपत्यम्मे सन्तानतन्तुरित्याकलयन्त्या पत्याऽपि चरमसमयेऽपत्यसंरक्षणएव सर्वथाऽऽदिष्टया भर्तृवियोगेन दग्धारण्यप्रायं जगत् प्रतियत्याऽपि पालितश्च लालितश्चाऽऽस्त कुलक्रमाऽऽगतविद्वत्तामाहात्म्यात् स्वपितृव्यादिकोटिकजनान्तिके किञ्चित्किञ्चिद(२)धीयन् । एवं पञ्चषवर्षदेशीयएव च जातु प्रसक्तानुप्रसक्ततया क्व चन लोकैरुपकथ्यमानं केन चित्पण्डितेन मुधाकृतं स्वपितुः शास्त्रविमर्शेऽवमानमाकर्ण्य विदीर्णहृदयस्तत्क्षणमेव सुजैत्रसुश्लाघ्यवैदुष्यकाम्यया देवतामुपासितुमध्यवससौ । ततोऽनतिचिरस्य सरस्वतीं देवीमुपासितुमुद्युक्तोऽयं बालस्याल्पसत्त्वतया यथावद्विधेरनिर्वहणं सम्भावयन्त्या जनन्या प्रथमं निवार्यमाणोऽपि यदा नोपरतो, नानाविधभयकथोपकथनादिनाऽपीषन्माचेणापि च न विकृताशयो दृष्ट,स्तदैतन्महासत्त्वतया प्रसीदन्त्याऽनुमोदितश्चारेभे तच्चिन्तामणिमन्त्रतद्यन्त्रजपार्चनादिना प्रसादयितुं वागधिदेवताम् । तदेवं यथाशास्त्रमनुतिष्ठतोऽल्पवयसोऽप्यस्य कया चन कालकलया प्रतिबभावऽव्याहता प्रतिभा । निश्चिकाय चायं, यथा 'सुप्रसन्ना देवता,

(१) कान्यकुब्जनगरे भूरयो गृहाः संसन्त्या,ऽऽचक्षते च ते एतत्संतानप्रतानरूपतामात्मनः । एतेन काश्मीरत्वमस्योत्पश्यन्तएकद्वा जना जातोत्तराः संजाताः ।

(२) विशेषे गता ।

जातञ्च नः समीहितमि'ति। ततोऽयं सकृदीषन्मात्रगुरूपदेशेन सुबहुप्रतिभातशास्त्रार्थो नातिचिरेणैव कालेनाऽचकलत्तमां चतुर्दश विद्याश्चोपविद्याश्चापि नास्तिकतन्त्राणि। अथाऽयं कान्यकुब्जाधीश्वरस्य परिषदि व्यजेष्ट तं, यो ऽस्ति स्मास्य पितुरवमन्तृचरः। राजेश्वरेण च सबहुमानं कान्यकुब्जनगरमेव स्वराजधानीमधिवासितोऽवृतत्तमां तमेवाऽऽश्रितः। यदा यदा च महीमहेन्द्रसंसदमगा, तदाऽधिकार्हाऽऽसनमविन्दत ताम्बूले च, विद्वदन्तराणि चैकैकमेवाऽविदन्त"—इत्यादिर्बहीयसी विद्वज्जनप्रसिद्धा; भवेदपि यथार्थैव। अथाऽपि नास्ति ग्रन्थोपनिबद्धेति सर्वसमक्षा तस्यास्तथात्वे प्रामाणिकबहुत्वविद्वज्जनाएव प्रमाणम्। नचाऽत्राऽसंभूतइवाऽस्ति कश्चिदर्थ इति वयमपीत्थमिदमिति मन्यामहे। देवताऽऽराधनजन्यपरमतमवैदुष्यादिषु तु तेषु तेष्वर्थेषु नास्त्येवतरां कथमपि कस्य चिदपि बुद्धिमतो विशयो नाम। भवति चात्र प्रमाणं नैषधीयचरितम्। तथाहि, तस्य प्रथमसर्गान्तिमश्लोके "श्रीहर्षमि"त्यादिश्च चतुर्दशे च सर्गे "अवामा वामे"त्यादिः संदर्भश्च (१) "तव च तव वृत्ते कवयितुः" "भवद्वृत्तस्तोतुर्मदुपहितकण्ठस्य कवितुरि"त्येवमादिना स्पष्टमाचष्टे देवताप्रसादलब्धामस्य कवयितुर्विद्वत्ताम्॥ नैषधीयचरित, ऽर्णववर्णन, शिवशक्तिसिद्धि, साहसाङ्कचम्पू, छन्दप्रशस्ति, विजयप्रशस्ति, गौडोर्वीशकुलप्रशस्तीः काव्यनिबन्धान्; ईश्वराभिसन्धि, खण्डनखण्डखाद्य, स्थैर्यविचारणप्रकरणानि च शास्त्रीयसन्दर्भान् सोऽयं धीरधौरेयोनेकधाऽतिधिषणस्तदानीमप्रतिसंख्येयसद्भावान् वाराशि-

(१) (८५-८६) स सन्दर्भः प्रतीकतएव, नत्वशेषतयोपन्यस्यते विस्तरभयात्। अवामावामेत्यादेः पद्यस्य यथा मन्त्रतन्त्रगमकत्वं, तथा कस्यां चिदप्येकस्यामेतद्व्याख्यायामवलोकनीयम्। तव वृत्ते कवयितुरित्येवं जातीयकेन वाङ्गयेनात्मानमभिसंदधाति ग्रन्थितेत्यवदधतु सुधियः।

मिव भगवान्कुम्भसम्भवश्चुलकयन्त्सारस्वतसर्वस्वं न्यभान्त्सीत्पयूष-वर्षिणो दीर्घदर्शिहर्षिणो लोकोत्तरानितराऽतिदुष्करान्; येषां सुधाम्भोनिधीनामगाधहार्दानामप्रतिमयुक्तिरत्नैकभुवां महाप्रमाणसत्त्वानां परमरमणीयानामप्यतिविभीषणविवर्तभाजां संपर्केण ऋजवोऽपि जनाः क्षणानक्षुमाचानप्यासाद्य संपद्यन्ते गीर्वाणायमानाः ।

तत्र नैषधीयचरितं जगति को वा पण्डितजनो न वेद । अन्येषाञ्च ग्रन्थानां पुस्तकानि प्रायो नास्मादृशां भवन्ति दृग्गोचरा,-स्तथापि तन्नामान्येव सन्तु साक्षिणो वर्ण्येषु; यथा—अर्णवर्णनं नाम समुद्रमन्थनवर्णनं स्यात् । शिवशक्तिसिद्धिरिति शिवनाम्नो नृपस्य शक्तिप्रकाशकतच्चरितवर्णनमयं स्यात्; गौरीगिरिश(१)माहात्म्य-वर्णनस्वरूपन्तु न स्यादित्यपि को वेद । साहसाङ्कनाम्नो महाराजस्य चरितमयी खलु साहसाङ्कचम्पूर्नाम(२) । छन्दप्रशस्तिरस्तिच्छन्दनाम्नो

(१) परं, स्त्रीसमर्पकपदानां पुंसमर्पकपदेभ्यः प्राक्प्रयोगस्य दम्पतिद्वन्द्वस्थलेऽत्याऽवश्यकतया प्रकृते च तदसत्त्वात्तु पुनर्नेदं सुष्ठु । यद्यपि नेदं पाणिनीयानुशासनानुशिष्ट-मथापि बालानां प्राथमिकादिग्दर्शनं तदिति ध्येयम् । गिरिशमात्रवर्णनमयत्वे वा पूर्वव-त्षष्ठीतत्पुरुषेण स्यादपि ।

(२) "केऽभूवन्नाऽऽढ्यराजस्य राज्ये प्राकृतभाषिणः । काले श्रीसाहसाङ्कस्य के न संस्कृ-तवादिनः" इति आबालवृद्धाऽऽपामरपण्डितजनजगज्जातकर्णपूरीभवत्कीर्त्तिपूरः श्रीमन्म-हाराजाधिराजो भोजराजः सरस्वतीकण्ठाभरणस्य द्वितीयपरिच्छेदे। तट्टीकायाञ्च रत्नेश्व-रमिश्राः—"आढ्यराजः शालिवाहनः । साहसाङ्को विक्रमादित्यः । ग्रन्थकृत्पूर्वजतया श्रीपदम्" इति । श्रीमन्महाराजाधिराजराजिकिरीटकोटिविटङ्कोट्टङ्कितमणिमरीचिमञ्जु-लमञ्जरीजरीजृम्भ्यमाणचरणनखरद्युतिसम्राट्सार्वभौमपरमेश्वरस्य तावत्तस्य परःसहस्र प्रातिपादिकसाहसचरितयशोविसरा व्यश्नुवते जगन्ति; यथा, व्याकरणाऽद्वैतवैदुष्यं विच-क्षणचक्रचूडामणिं योगपरिशीलनशीलशालिनं निजानुजं भर्तृहरिं नाम नियुज्य पृथिवी-प्रजापरिपालनाधिकारे, परिवर्त्य वेषमेकाकी विचचार जगतीतलम्, सपत्नसभेषूपतस्थौ-विपक्षपक्षमन्त्रादीञ्शुश्राव, निशीथाद्यवसरेष्वरातिध्वजिनीर्निध्यातुमवजगाहे, करक-लितशस्त्रमात्रसहायो निजनामाऽऽवेद्याऽऽततायिनीः परचमूश्चिच्छेद, परान्परस्परेभ्यो बि-भेद, तमिस्रातारुण्येषु श्मशानोद्देशेषु निःशङ्कातङ्कं परिचक्रामेति । तदेवमस्य साहस-प्रधानलक्षणत्वात्साहसाङ्क इति नाम जगति पप्रथे । श्रीमद्द्विद्वन्मुकुटमणिवराहमिहिराचा-र्यकालिदासकविसार्वभौमप्रभृतिनवरत्नशालित्वादिरूपगमकविशेषैः समुपपद्यते खल्वेत-द्दोयसमयस्य संस्कृतमयत्वमिति वयमपि मिश्रव्याख्यामित्थमिति शिरसा बिभ्रमहे, परं

राज्ञः कीर्त्तिसंकीर्तनम् । विजयप्रशस्तिः कस्य चन महाराजस्य शत्रु-सङ्ग्रामाङ्गणे विजयप्राप्तिवर्णनम् । गौडोर्वीशकुलप्रशस्तिश्च गौडदेशाधीश्वरराजवंशवर्णनं रघुवंशादिकल्पमिति । ईश्वराभिसन्धिस्तु मायिकत्वेऽपि जगतो यथेश्वराज्जन्मस्थेमभङ्गभाक्त्वं, तथाभावनिरूपणं बौद्धमतनिराकरणं प्रतिभातो भवति । अभिसन्ध्यन्तरञ्च श्रीहर्षे यत्किं चन श्रूयते, तदीश्वराभिसन्धेः प्रकरणमिति भूयसा विभावयामः । स्वोत्पत्त्यवच्छेदकीभूतक्षण [व्यवहितोत्तरक्षण] वच्छिन्न-ध्वंसप्रतियोगित्वरूपमाध्यमिकयोगाचारवैभाषिकसौत्रान्तिकात्मकचतुर्विधबौद्धमतसिद्ध क्षणिकत्वनिराकरणपरं स्थैर्यविचारणप्रकरणमिति विदाङ्कुर्वन्तु कोविदाः ।

तेषु खण्डनखण्डखाद्यमीश्वराभिसन्धेः पुरस्तात्पुस्तकान्तराणां च परस्तान्निरमायीति श्रीगुरुचरणाः । नैषधचरिते 'खण्डनखण्डतोऽपि सहजे' इति, खण्डनखण्डखाद्ये च 'तथाहमकथयं नैषधचरितस्य परमपुरुषस्तुतौ सर्गे' इत्यन्योन्यस्मिन्नन्योन्यलेखादुभयोः समसमयसन्दृब्धत्वमिति तु पुनर्मदीयं मनो मन्यते । वैदुष्यस्य परमपरिपाकाऽवस्थायामस्य ग्रन्थनमासीदित्येतावत्त्वाह स्मास्माकं प्रियसुहृत्खण्डनरत्नाकरमन्दरः श्रीमान्मोहनलालविपश्चिच्चूडामणिः । ग्रन्थस्य चास्य खण्डनखण्डखाद्यम्, खण्डनखण्डम्, खण्डनखाद्यम्, खाद्यखण्डनम्, खण्डनञ्चेति नामानि प्रथन्ते । तत्र खण्डनखण्डखाद्यमिति पूर्णं नाम । भामा, सत्येत्यादिव "न्नामैकदेशग्रहे पूर्णग्रह" इतिन्यायेन सुखभाषणकाम्यया लघूकृतानि तु नामधेयान्तराणि । खण्डनस्य=लक्षणप्रमाणादिशास्त्रीयपदार्थनिर्वचनप्रति-

नैषधे "नवसाहसाङ्कचरिते चम्पूकृत" इति ग्रन्थकृल्लेखात्", नवो यः साहसाङ्कोपनाम राजे"त्यादिनारायणविवरणाच्च नवत्वविशेषणस्वारस्यान्यथानुपपत्त्या कान्यकुब्जेश्वरसाहसाङ्कस्य वर्णयित्रीयं चम्पूर्नतु श्रीमद्विक्रमार्कपरमेश्वरस्येति भूम्ना विभावयति मे चेतः ॥

द्वन्द्विभूतखण्डनस्यैव खण्डस्येत्तवद्द्रवत्तोदस्य खाद्यमाद्यं स्वाद्यमिति यावत्, य,त्तत्खण्डनखण्डखाद्यमित्येकोऽर्थः । खण्डनेनोक्तलक्षणेन खण्डाः खण्डिताः खमाद्यं येषां ते खाद्या गगनादयः(१) पदार्था येन यस्मिन्वा तत्खण्डनखण्डखाद्यमिति तु द्वितीयः । वैद्यकमतानुसारेण पुनरयमर्थः, यथाऽऽमयखण्डने खण्डखाद्याख्यः पाक, स्तथाऽशेषमतखण्डनेऽयमपि प्रगल्भते प्रबन्धः । खण्डखाद्यं चोक्तं हारीते—

"शतावरी छिन्नरुहा वृषो मुण्डितिका(२)बला ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥
भार्ङ्गी(३)पुष्करमूलं च पृथक् पंच पलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥
दिव्यौषधिहतस्यापि माक्षिकेण हतस्य वा ।
पलद्वादशकं देयं रुक्मलोहस्य(४)चूर्णितम् ॥
खण्डतुल्यं घृतं देयं पलषोडशकं बुधैः ।
पचेत्ताम्रमये पात्रे गुडपाको मतो यथा ॥
प्रस्थार्द्धं मधुनो देयं शुभाश्म जतुकत्वचम्(५) ।
शृङ्गी विडङ्गं कृष्णा च शुण्ठी जाजी पलं(६)पलम् ॥

---

(१) यद्यपि गगनादिपदार्था नात्र खण्डयन्तेऽपि तु प्रमाप्रमाणाद्या,स्तथापि गगनादीनामात्मप्रतिलम्भका ये प्रमाप्रमाणादयस्तेषां खण्डने कृते सति सुखण्डता एवैतद्भाति ध्येयम् ।

(२) मुण्डितिकेति पुस्तकान्तरपाठः ।

(३) भार्गीति पु॰ ।

(४) रुक्मलोहस्येति पु॰ ।

(५) जतुकं त्वचमिति पु॰ ।

(६) जातीफलं पलमिति पुस्तकान्तरपाठस्तु न साधीयान्प्रतिभाति ।

त्रिफला धान्यकं पत्रं व्यत्रं मरिच-केसरम् ।
चूर्णं दत्त्वा सुमथितं(१)स्निग्धभाण्डे निधापयेत् ॥
यथाकालं प्रयुञ्जीत बिडालपदमात्रकम् ।
गव्यक्षीरानुपानं च सेव्यं मांसरसः पयः(२) ॥
गुरुवृष्यान्नपानानि(३)स्निग्धमांसादिबृंहणम् ।
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ॥
वातरक्तं प्रमेहं च शीतपित्तं वमिं क्रिमिम्(४) ।
श्वयथुं पाण्डुरोगं च कुष्ठं प्लीहोदरं तथा ॥
आनाहं मूत्रसंस्रावमम्लपित्तं निहन्ति च ।
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम्(५) ॥
श्रीकरं लाघवकरं खण्डखाद्यं प्रकीर्तितम्"(६)—इति ।

तत्र प्रथमोऽर्थो ग्राम्यो, द्वितीयतृतीयावेव तु साधूइति श्रीगुरुचरणाः ॥

तदेतत् खण्डनखण्डखाद्यं व्याख्यच्छङ्करमिश्रः । अयं हि मैथिलब्राह्मणो भवनाथविदुषः पुत्रः प्रशस्यपाण्डित्यो विभूम्ना तार्किकोऽभूत् । दीधितिकारस्य शिष्यो मथुरानाथस्तर्कवागीशो, यदीया माथुरीति न्यायतत्त्वचिन्तामणेश्चतुर्ष्वपि खण्डेषु व्याख्या विख्याताऽस्ति ; यामन्तरेणेदानीन्तना जना जागदीशीगादाधर्य्याववधीयानाअपि नतरां भवन्ति परिपचेलिमपाण्डित्यास्तर्कतत्त्व-

(१) सुमथितमित्यस्य स्थाने समुत्थाप्येति पाठान्तरम् ।
(२) सेव्यं मांसरसं पयइति पु॰ ।
(३) गुरुवृष्यानुपानानीति पाठान्तरन्तु 'गव्यक्षीरानुपानं चे'त्यनुपानस्योक्तत्वान्नसाधीय इति विभावयामि ।
(४) शीतपित्तवमिं क्रममिति पुस्तकान्तरं तु न बहुमन्ये ।
(५) आरोग्यं पुत्रदं श्रेष्ठं कायाग्निबलवर्द्धनमित्यर्द्धमधिकं पुस्तकान्तरे ।
(६) (खण्डकाद्यं प्रकीर्त्तितम् इति पु॰)। पूर्वोक्तलौहान्तरवत्पथ्यापथ्यं प्रयोजयेदिति च शेषः ॥

२।१७

समभ्याम् । एवं हि विद्वज्जनकिंवदन्ती—"कदाऽपि मथुरानाथमहाशयमेकस्याः कस्याश्चनातिव्याप्तेः परिहारं विभावयन्तं स्वयमाससाद कश्चनाऽपरिपक्किमो योगी, लम्बितश्चातिथेयीन्तमवोचत्

"तर्ककर्कशविचारचातुरी का तुरीयवयसा विभाव्यते ।

आतुरीभवति यत्र मानस"मिति त्रिपादीम् । तदायमसौ पपाठ"धातुरीप्सित मपाकरोति क"इति । ततः सोऽस्य लोकातिगं शास्त्रासङ्गमभिलक्ष्य तुष्टः सन्यथागतं ययौ । तस्य च शिष्यो रघुदेवभट्टाचार्यः, यं हि तदीयशिष्याः कणादइति व्यवहार्षुरित्यभिनवकणादइति प्रथते स्म। तस्य च शिष्यःशङ्करमिश्रः। यथैतदीयवैशेषिकसूत्रोपस्कारे—

"याभ्यां वैशेषिके तन्त्रे सम्यग्व्युत्पादितोऽस्म्यहम् ।

कणादभवनाथाभ्यां ताभ्यां मम नमःसदे"ति ॥

यद्यपि खण्डनखण्डखाद्येऽस्मिन्सन्त्यन्याअपि विद्यासागरीया(१)दयोऽनेका व्याख्या,स्तथाऽप्यतिगहनार्थानां पराचीनतया जगदतिगविषयतया च खण्डनाक्षराणान्ततोऽप्यल्पैरेवाक्षरैर्व्यक्तं भावार्थप्रकाशनेन, स्थाने स्थाने खण्डनमुद्धृत्य चरमानुभवाद्यभिधानेन चाऽस्यां शाङ्कर्यामतितरां रज्यन्ति सन्तः । यथाऽद्वैतसिध्यादिः शिष्याणामद्वैतावबोधस्य परममीष्टि, तथेदं खण्डनखण्डखाद्यं प्रतिवादिविजयस्य सर्वथा । यथाचैव—

"शब्दार्थनिर्वचनखण्डनया नयन्तः

सर्वत्र निर्वचनभावमखर्वगर्वान् ।

(१) नामधेयत्वेन वृद्धत्वाक्कः। सार्वजनीनाः सागरीत्यादयस्तु व्यवहाराः 'कैकेयी'त्यादयइव पुंयोगलक्षणङीषा जन्यजनकभावरूपपुंयोगसद्भावान्निर्वाह्याः ।

धीरा यथोक्तमपि कीरवदेतदुक्त्वा
लोकेषु दिग्विजयकौतुकमातनुध्वम्" ॥

चित्सुखीयादिषु न्यायमतखण्डनादिकमस्यैव विस्तीर्णविवर्तभूतमास्ते ।

तदेतद्ग्रन्थरत्नं विद्वज्जनानामऽकारणमित्त्रेण विद्यापरमेण संस्कृतसंभृतसमादरेण श्रीमता A. Venis, M. A. महाशयेन प्रोत्साहितः खलु प्रव्यङ्क्तु । टीकोट्टङ्कितेष्वपि दुरवगाहेष्वन्तराऽऽन्तरा स्थलविशेषेषु स्वयमुपनिबध्यमानया गर्तप्रदर्शिन्या नामोपवृत्या (टिप्पणया) संप्रकाशयन् सुसंस्कुर्वन्व्यञ्जयँश्च चिह्नविशेषैः प्रकाशयितुमारब्ध श्रीमान्मोहनलालवेदान्ताचार्यः । अथ दुर्दैवोपनिपातप्रभावादन्तरैव स्मृतिमात्रपात्रे सम्पन्ने चात्र भवति मोहनलालेऽत्यावश्यकार्द्धसंस्कृतिमुद्रितस्यास्य ग्रन्थरत्नस्य संस्करणमुद्रणयोः परिसमाप्तिरिति विभावद्भिः श्रीशास्त्रिवर्यैः पूर्वसंस्कर्तृसुसमानपाण्डित्यशाली सांख्ययोगवेदान्तोपाध्यायः श्रीमान् कुलयशस्विशास्त्री खल्वत्र संस्करणकार्ये स्म प्रवर्त्तितः । मुद्रयित्रा च भारतश्वःश्रेयसानुध्यायिनादीनदयार्द्रहृदयेन सौजन्यधन्येन दुष्प्रापशास्त्रीयग्रन्थाङ्कनोज्जीवनगृहीतदीक्षाकङ्कणेन श्रीयुत Dr. E. J. Lazarus, महाशयेन 'शुभस्य शीघ्र'मिति मन्व्यानेन तथाऽऽवेदितोयं शीघ्रतया प्रायो निष्टिप्पणीकमेव संस्कर्तुं प्रावृतत् परिसमापिपच्च तत् । अशशङ्कुलच्चैतद्विषयविशेषान्सूचीमुद्रयाऽसुसूचच्चाऽऽपाततः सञ्जाताःकिलाऽशुद्धीः । तदेतत्समाप्तमखण्डस्यास्य खण्डनखण्डखाद्यस्य मुद्रणम् ॥

प्राक्किल कालिकापत्तनेऽ(कलकत्ता)स्य द्विस्समवृतन्मुद्रणं, यथा व्याख्यासंस्कृतिविरहन्तत्वाऽऽलोक्य दोषज्ञानां चेतएव नोदसहताऽध्येतुमध्यापयितुं वा । तच्चिरराचाय समभिलष्यमाणं सांप्रतं

व्याख्यासनाथमर्द्धमाचोपवृत्तिसमलङ्कृतं सुसंस्कृतं सुव्यञ्जितमुद्रितं ससूचीपत्रमखण्डं तदेतत्खण्डनखण्डखाद्यं समासादयन्तु समास्वादयन्तु संपादयन्तु च तदध्यायनाध्यापनादिपारम्परीं पण्डिताऽऽखण्डला,मण्डयन्तु च तत्र भवतो वशीकृतसारस्वतसमृद्धिविभून्न: खण्डनकृतश्च, तत्सनाभवैदुष्यप्राग्भारभृतस्तद्व्याख्याकृतश्च, तदनु टिप्पणीकृतश्च समग्रोदग्रप्रत्यग्रजाग्रत्कीर्त्तिविसरैर्जगन्ति । अथ शास्त्रलताप्रताननिर्विघ्नोपघ्नकल्पमहीरुहा भारतभूविभूषणभूताऽस्मदीयविपश्चिच्चूडामणयश्चेत्प्रसत्स्यन्ति, हन्त तर्हि प्रथमपर्यायमुद्रितेष्वस्यैतेषु पुस्तकेषूपयुक्तेषु नचिरादेवैतद्ग्रन्थरत्नमाद्यन्तत: सुपर्याप्तोपवृत्तिसमलङ्कृतमतीवतरां संस्कृतं च भूयोऽपि मुद्रणां लम्भयिष्यतइति संभावयामि—

१६४४तमवैक्रमाब्दे माघशुक्लपञ्चमी

कश्चिदाऽऽवसत्थ्याख्यास्पदकान्यकुब्जो, ब्रह्मामृतवर्षिणीसभास्तार:, साहित्यधर्मशास्त्रसांख्ययोगवेदान्ताचार्यो,

रा० भागवताचार्य: ।



( श्रीशः )

( ॐ नमः प्रातःस्मरणीयेभ्यो भगवद्रामानुजाचार्यचरणेभ्यः )

# श्रीमदुदासीनसाधुप्रवरमोहनलालवेदा-न्तादिविविधशास्त्राचार्यस्य जीवनवृत्तान्तः ॥

श्रीमान् मोहनलालवेदान्ताचार्यः खलु दुर्लभगुणमयमूर्त्ति-रित्यत्र किमिव बहु ब्रूमो, नन्वेतावदेव पर्याप्तन्नाम, यदिह प्रायः सङ्गीतादिगुणगणभाजो जना नो खलु जायन्ते विपश्चितां चित्ता-सेचनकवैदुष्यशालिनः। अथ शतेषु सहस्रेषु वा कश्चित्कदाचिद्भव-न्नप्येवंविधो, दुर्विधो दरीदृश्यते विनयसम्पदाम्। अथास्तु क्वचित् कदाचित्कश्चिल्लक्षेषु लभ्यस्तथाच, तथाच, तथाच; तथाऽपि दुष्प्रापः खलु जगति जन,स्तथाविधो यो भगवद्भक्तिसुधानिष्णातो नाम। स्वर्ण-सौरभयोगः खल्वयं, यो जगति जनस्य दुर्लभगुणगणोपबृंहितस्य पुरुषा-र्थचतुष्टयप्रतिभूभूतभगवद्भक्तियोगो नाम। अयन्तु पुनर्वेणुवीणावीणाद्धे (=सितार) मृदङ्गजलतरङ्गप्रभृतिवाद्यप्रयोगेष्वनवद्यविद्योतमानयशा, गानेष्वविगानकौशलो, विचक्षणः परस्सहस्राणां भगवद्भक्तिसुधासमुद्रस-मुद्रिक्तप्रेमकल्लोलपरीवाहवेलायितमानसवृत्तिश्रीमत्सूरदासप्रमुखमहा-महानुभावप्रणीतगीतिकादीनां, स्वयं च तद्य(१)मकानां तेषां संप्रणेता, मृदुमञ्जुलकाव्यान्तरनिर्माणनिपुणश्चेति साङ्गोपाङ्गसङ्गीतसम्पत्सङ्गी-तकीर्त्ति,रथ तथाविधानाञ्च ग्रन्थानां निबन्द्धा ब्राह्मणेतरः (खत्री)

(१) तेषां सुसदृशानाम्।

सन्नि,त्येतावतैव नन्वनुमेयविद्यासमृद्धिश्च, तथा 'शत्रुतया गृह्यमाणे-ष्वपि मित्त्रायमाणस्य यस्य पुरस्ताच्छत्रवोऽपि मित्त्रायन्ते स्मे'ति तु न तावत्तद्विषये वक्तुमस्माकमवसरः ; युधिष्ठिरस्येव यस्याऽजातशत्रोः शत्रुरिति धीरेव नासीदित्यकम्प्रविनयसंपत्सनाथसौजन्यसम्पन्नश्च सँस्तत्तादृग्भगवद्भक्तिसुधाचषकायितचेताश्चेति चमत्कारकरमिदं किमपि । इदञ्चास्य प्रातःस्मरणीयवस्तुजातमासीत्,

"मुकुन्दभक्त्यम्बुधिमन्दरः श्रीमुकुन्ददासो दयतां सदा नः ।
यः श्रीहरेर्भक्तिरसामृतेनाऽस्माकं निरास्थन्ननु मोहनिद्राम्(१) ॥ १ ॥
किमेषगीर्वाणगुरुः किमेषपुंभाववाग्दैवतमित्यजस्रम् ।
दोलायितःसम्प्रति सम्प्रतिष्ठो हृद्यस्तु मे श्रीगुरुराममिश्रः(२) ॥ २ ॥
श्रीरामसदनो नाम ज्यायान्मे जयति ध्रुवम् ।
यदन्तःकरणं शश्वच्छ्रीरामसदनायते ॥ ३ ॥
गोपाङ्गनाऽपाङ्गचकोरचन्द्रः कंसादिविध्वंसनधूमकेतुः ।
संसारपारोत्तरणैकसेतुः कृष्णः सदा स्तात्प्रमदस्य हेतुः ॥ ४ ॥
सच्चित्सुखैकमूर्त्ति प्रमातृमुखकल्पनाश्रयश्चैकम् ।
अविकल्पवित्तिगम्यं कूटस्थं ब्रह्म यत्तदहमस्मि' ॥ ५ ॥

अयं खलु मोहनलालमहानुभावः पञ्चनदजनपदेषु गुरदास-पुरानामकमण्डले ( बाबा नानक का ) डेहरा—इत्याख्याविख्याता-धिष्ठाने प्रादुरासीन्नानकवंशप्रदीपः । अत्र वंशानुपूर्वीश्लोकाः—

"श्रीमन्महान्नानकनामधेयो द्योभूसुराणां खलु सद्विधेयः ।
बभूव नित्यंहरिभक्तिशूरः सौजन्यजन्योज्ज्वलकीर्त्तिपूरः ॥

(१) मन्दराद्रिणा प्रमामथ्यमानात्क्षीरोदन्वतो निरगादमृतम्, तच्च प्राश्या-ऽस्वप्नाः (देवाः) कृतकृत्याः समवृतन्यथा, तथा वयं यद्दयादृशा विबुधाःस्मः, सः—इति ।
(२) बृहस्पतित्वेन पुंमूर्त्यवतीर्णसरस्वतीत्वेन च भूयोभूयो विभाव्यमानः श्रीमद्रामिश्रशास्त्रिवर्यो विद्यागुरुर्मम हृदये संनिधत्तामिति स्थूलार्थः ।

तस्मादासील्लब्धजन्मा सुजन्मा लक्ष्मीचन्द्रश्चन्द्रवर्चा गुणाढ्यः ।
संसक्तोऽभूद्यो हि सत्यं जगत्यां हारे(१)भावे, नत्वहो लोकचारे ॥

धरचन्द्रो(२)ऽधरचन्द्रः कान्त्या कीर्त्या कलाभिश्च ।
लक्ष्मीचन्द्रादभवल्लक्ष्मीपतिपादपद्मरोलम्बः ॥

माणिकचन्द्रस्तस्मादभवन्माणिक्यमस्य वंशस्य ।
लोकेष्ववाप्तमानो मानविहीनश्च यः स्वयकम् ॥

दातारचन्द्रनामा तस्मादजनिष्ट शिष्टलोकानाम् ।
सम्मतगुणश्च निपुणो हरिचरणस्मरणनिष्ठायाम् ॥

उद(३)याद्रिचन्द्रनामा तस्मादभवत्समुल्लसद्धामा ।
रामाराधनपरमो यश्च कामाराधनोपरमः ॥

तस्मात्सुजानराये,तिप्रथितः पृथुलसत्कीर्त्तिः ।
कमनीयगुणगणाढ्यस्सज्जनसंरञ्जनाऽभिज्ञः ॥

तस्माद्बभूव च सदासदाऽऽशयाच्छ्रीसदाज्योतिः ।
यः सर्वदाब्द(४)रुचिरं चिरन्तनं ध्यातवाञ्ज्योतिः ॥

तस्मात्सकलकलानां केतनमभवत्कलासिंहः ।
कीर्त्या कलानिधेर्यः प्रतिनिधिरिव लक्ष्यते स्म संसारे ॥

तस्माद्वृढसिंहाख्यो बभूव लोके समुन्नतस्थितिकः ।
अन्वर्थीकृतनामा सिंहसदृक्षोऽसदृक्षगुणः ॥

(१) हारो हरिसम्बन्धी, भावः प्रेमा, "तदेव हारं वद मन्यसे चेदि"तिश्रीमद्भागवतानुसारीति हार्द्दम् ।

(२) पश्चाद्व्यन्तश्चन्द्रशब्दोऽपि चन्द्रवचनः । धरायाश्चन्द्रो धरचन्द्रइति "ह्यापोः सञ्ज्ञाछन्दसोर्बहुलमि"ति ह्रस्वमाऽनुसन्धेयः ।

(३) उदयचन्द्र इत्यर्थः ।

(४) घनाघनच्छटामेचकच्छवि शाश्वतिकं तेजो, वैष्णवं धाम,ऽऽदिपुरुषं पुरुषोत्तममिति यावत् ।

नानकवक्त्रेत्यभिधो नानकवंशोचितस्ततो जातः ।
ददद्पि नाणकराशिं दिनं दिनं यः कपर्दिनं(१) भेजे ॥
तस्माद्बभूव नाम्नाऽसौ पूरसिंह इति श्रुतः ।
दोषे(२)दन्तावले नित्यं पूर्णसिंह इति श्रुतः ॥
तदात्मजोऽयं शुचिमार्गगामिनां सुसंमतः पात्रगुणोपक्लृप्तिमान् ।
गभीरसुस्वच्छसुशीतलाशयो रसोत्तरो मोहनलालनामकः"(३)॥

तदित्थमयं श्रीमन्नानकात्त्रयोदशउत्तरपुरुषः । जन्मतः-प्रभृत्येवास्य चेतो लौकिकविषयाणामस्ति स्म वैदेशिकम्(४) । स्तनन्धयोऽपि(५) यो हरिभक्तेः स्तनन्धय(५)इवासीत् । यथा यथा च वर्द्धते स्म, तथा तथा हरिभक्तिरसास्वादादहृष्यदपुष्यदतुष्यच्च । तदेवमयं समानशीलेन ज्यायसा सोदर्येण श्रीरामसदनाभिधेन सह कौमारादेवारभ्य वर्तमान आस्वादयन्भक्तिरस,मधीयन्परिशीलयँश्च ब्रह्मवादानासीत् पञ्चनदविषयेष्वेव । अथ स्वैरं स्वैरं पवित्रक्षेत्राणि समीक्षमाणो, नानाजनपदान्गाहमानः, पुण्यसरित्स्ववगाहमानो, भगवदर्चाश्चार्चय,न्भूदेवांश्च प्रणमन्,गाश्च प्रदक्षिणीकुर्वन्, वेदान्तादिविचारैर्विदुषश्च

(१) कपर्दः शैवो जटाजूट,स्तद्वाञ्छिव एव ।

(२) दोषरूपे गजे इति व्यस्तरूपकं द्वैपद्ये, अथ च दोषाणामिदन्तावलं सर्वजनसंवेदनसिद्धाऽऽकर्षकतावलं, तत्रेत्येकपद्यकोटिः । कोटिद्वयेवबयोर्भेदा तु तयोरैक्यस्य कविसंप्रदायसिद्धत्वादेतादृशेऽवसरेऽकिञ्चित्करी ।

(३) विशिष्टशिष्टाचाराऽलंकर्मीणजनानां बहुमतो ज्ञानविज्ञानसौजन्यकलाकलापादिसद्गुणसंपन्नो गम्भीर,मायामात्सर्यादिदोषजातानुपहतप्रशान्तचित्तवृत्तिःश्रीकृष्णलीलाविलासदर्शनाऽऽदरइति प्रकृतकोटिः । भीष्मग्रीष्मपथिकानामभीष्टो भवति किल कलसिकाडोरिकासमुपहितो गम्भीरतया सर्वथा अनाबिलसुखशीतलसुरसजलपरिपूर्णः कूप इत्यप्रस्तुतकोटिः । एवं च निरुक्तरूपकूपइवासावित्युपमा पर्यवस्यति । तेन च परोपकारसंभारसंपादनमात्रप्रयोजनसंभृतशरीरत्वादिलक्षणो वर्ण्यगतो विशेषः परिस्फुरतीति विदां कुर्वन्तु हृदयालवः ।

(४) तेभ्यो विरक्तम् ।

(५) शिशुस्तदेकवृत्तिश्च ।

सन्तोषय,न्दयानन्दसरस्वतीप्रमुखाँश्च प्रच्छन्नान्नास्तिकान् अयमाया-तोऽयमायातइति जनतातः स्वीयतद्विगागमनश्रुतिमात्रेण कान्दिशी-काँश्च विदध,द्वधच्च सनातनवैदिकधर्मकर्मप्रतिष्ठां जनमनस्स्वा,ऽऽसा दयामास(१) वाराणसीम् । तत्र च तदीयरामणीयकापहृतहृदयोऽधिकं वासमरोचयत् । निवसँश्च 'वाराणसी साम्प्रतं परमं विद्याक्षेत्रमि'ति-के केऽत्र कीदृशाश्च विपश्चितइति ताँस्तानाकर्णयन्निर्वर्णयँश्च कदाचन श्रीयुतसाहित्याचार्याम्बिकादत्तव्यासेन समगच्छताऽपृच्छच्च तमसौ कथानुकथनपारम्परीसम्प्रवृत्तौ—"अप्यस्ति तादृशोऽत्र कश्चिदवश्यद-र्शनीयो, योऽसौ विपश्चितामपश्चिमः स्याद्दर्शनेषु, निपुणानां मूर्द्धाभिषिक्तस्स्याच्चातुरीषु, आचार्याणामग्रणीः स्यात् पवित्राचारेषु, सभास्ताराणां (२)प्राग्रहरः स्याद्व्यवहारेषु, भागवतानां च परम-स्याद्भगवद्भक्तिप्रपत्तिप्रमुखमोक्षोपाये,ष्वनुक्तेष्वप्येवंजातीयकेषु लोक-दुर्लभगुणेषु गरीया,न्वरीयांश्च स्याद् ब्रह्मविद्यातर्कविद्ययोः" । आक-र्ण्य चेदं विस्मेरहृदयः स व्यासवरः सुस्मेरवदनमेवमुत्तरं तरङ्ग-यति स्म "अयि कौतुकिनां शिरोमणे, कुतोऽद्य श्वो जगति जायन्ते भवदुपगणितगुणानां समष्टयो नामैवंविधा विशिष्टाःशिष्टाः । प्रायो दृष्टाएव च भवेयुरत्र भवता तत्तद्गुणशालिनस्ते ते लब्धवर्णाश्च, भगवद्भक्ताश्च, संन्यस्ताश्च, विदग्धाश्चा,न्ये च गुणिनः । परं विलक्षणगुणसमष्टिर्भवानऽन्विष्यति खलु तादृशीं समष्टिमेव । नूनं साधू-क्तमभियुक्तैः "यो यादृशः, स तादृशेऽभिरमत" इति । भवत्प्रश्नवा-चोयुक्तिरेव च व्यनक्ति, यथाऽद्यावधि नो खलु लोचनगोचरीचरीक-रीति स्म भवानत्र भवन्तं श्रीराममिश्रशास्त्रिवर्यम् । तदुत्तिष्ठापनय चेदं

(१) "आङः यद पद्मर्थे" ।
(२) प्राग्रहरः श्रेष्ठः ।

कौतूहलं, मा विलम्बस्व, सफलयाद्येव चक्षुषी, पश्याद्य वाराणस्याः समस्तभारतस्यैव वा सारवत्ताम्—इत्यभिदधद्देवोदस्थात् । अथैतौ ग्रीष्मर्तुसायाह्ने ऽस्ताचलचूडामणीभवति भगवति भास्वति दशाश्वमेधगङ्गाघट्टमगाताम् । तत्र च सान्ध्यं विधिमनुष्ठाय द्वित्रैः प्रियच्छात्त्रैः समं समासीनं शास्त्रिवर्यं भगवत्याभागीरथ्यास्तटपट्टके दूरादादर्शताम् । अथ व्यासवरो 'ऽयमेवासावत्र भवानास्ते, तदहं भवन्तमावेदयामि तावत्तत्र भवते शास्त्रिवर्याये'त्युक्त्वा, गत्वा, नत्वाचा, वेद्य,तेनाभ्यनुज्ञातश्च प्रापय्य मोहनलालमदीदृशत् । मोहनलालस्तु सहजविनयव्यानम्रस्तदुदारमूर्त्तिदर्शनाच्च सुदूरमारोपितश्चमत्कारेणा,भिजातनमस्कारेणार्चयच्छास्त्रिवर्यम् । शास्त्रिवर्यस्तु 'आगम्यतामास्यतामिहे'त्युभावप्युपवेष्टुमादिदेश । अथ शास्त्रिवर्यो व्यासवरमन्वयुङ्क्त—'क्व इमे, कुतः समायान्ति, किं वोद्दिश्येत्यशेषमाख्यायताम्' इति । व्यासवरस्तु—'जन्मजगतीतः पश्चिमाअप्येते तावदपश्चिमा महात्मानो वाराणस्यामायाता निवसन्तश्चात्र कियतोऽपि काला,दद्यभवद्दर्शनार्थितयैवेह मया सह समायाताः'—इत्यचकथत् । शास्त्रिवर्यस्तु परमतुष्यन्मोहनलालस्य शान्त्या च, गाम्भीर्येण च, विनयेन चा,वोचच्च 'भद्रं, यथावकाशं भूयोऽपि कदा चिदागन्तव्यमि'ति । उक्त्वा चोदतिष्ठत् । एतावपि च नमस्कृत्य शास्त्रिवर्यं यथागतं गतौ । अथ गच्छतोरेनयोः प्राकृतदालापः—'अहो धन्या वाराणसी, यत्रैतादृशो विद्वद्वृन्दारको द्रष्टुं प्राप्यते, अहो संपन्नमद्य गीर्वाणगुरोर्दर्शनम् । यदि शास्त्रिवर्योऽनुगृह्णीयादस्मादधीयीयेति स्पृहयते मे चेतः' । एवं भविष्यतीति चाह स्म व्यासवरः । अथापरेद्युरयं व्यासवरेण सहैवोपससाद सदनं शास्त्रिवर्यस्या,वेदयामास च व्यासवरमुखेन स्वं

मनोरथम् । शास्त्रिवर्योऽप्येतस्य तादृशीं सुशीलतां शुभंयुहार्दतां(१) चालक्ष्यान्वमोदत तम् । अथ प्रारब्ध मोहनलालोऽध्येतुम् । षड्भिर्वत्सरैरनवच्छिन्नमधीयन्करक्रोडीकृतवान्स्मावश्याध्येतव्यं वेदान्तसांख्ययोगादिग्रन्थजातम् । अथायं स्वयमनिच्छन्नपि पुरस्कृत्य गौरवीमाज्ञां संस्कृतसाम्राज्यविद्यामन्दिरे वेदान्ते साङ्ख्ययोगयोश्च वितीर्याचार्यपरीक्षां तेष्वार्जिजदाचार्यतामाम्रेडिताम् । तदनु च पुनः संस्कृताङ्गलप्रबन्धे प्रतिष्ठाप्यमाने परीक्षावदेव प्रावर्तिष्ट शिक्षितुं समासाद्याऽऽङ्गलीविज्ञानं तदुपनिबद्धान्भौतिककलाग्रन्थान्यद्यावतारयिष्यमार्यया,( हिन्दी )मुपाकरिष्यन्तर्हि स्वदेशबन्धुजनतायाइत्येवं समीहमानः । अथास्य धिषणाञ्च मेधाञ्च प्रतिभाञ्च तत्त्वाऽऽकलनाञ्च प्रेक्ष्य प्रसद्य च प्राह स्म शास्त्रिवर्यः 'अयि भवन्! भवान्वा मतेऽद्याऽपूर्वमुपनिबन्धुम् । तद्भ्रयातु कँाश्चन्निबन्धान् । क्षममाणो ह्यकिञ्चित्कुर्वाणो गीर्वाणोऽपि न खलु बहु मन्यते जनैः । कुर्वाणश्चैवमुपकुर्वाणो भविता भवाञ्जनतायाश्च विद्वत्तायाश्च बुद्धिमत्तायाश्च । तदेवमभिहितो हितोपदेष्ट्रा गुरुणा करुणावरुणालयेन मोहनलालोऽपि गुरुणा विनयेनाब्रवीत्, 'गुरुचरणानां करुणासरणिमध्यमध्यासीनस्याजानानस्यापि जनस्य किमिव दुष्प्रापन्नामे'ति(२) । अथासौ प्राणैषीन्निबन्धान् । ते यथा, दोषदूषकतामूलनिर्णयः, महामोहमोहविद्रावणम्, वेदान्तसिद्धान्तादर्शः, खण्डनगर्तप्रदर्शिनीत्याद्याः संस्कृतस्य; शिल्पचमत्कारचिन्तामणिः, प्रतिबिम्बचित्रचिन्तामणिश्चा-

---

(१) शुभतात्पर्यवत्ताम् ।

(२) जनस्येत्यत्र "न लोकाऽव्ययनिष्ठे"त्यादिना षष्ठी प्रतिषेधेऽपि 'कोशदण्डसमग्राणां किमेषां खलु दुष्कर' मित्यादाविव कविकुलक्षणत्वेन गुणत्वाच्छैषिकीषष्ठी । अत एव "इदं हि शास्त्रमाहात्म्यदर्शनाऽलसचेतसाम् । अपभाषणवद्भाति न च सौभाग्यमुज्झती" त्याहुर्हृदयजुषः । एवमेव 'भवन् !' इत्यादावपि तत्र तत्र समीचितव्यं सूरिभिः ।

ऽऽर्याया: ( हिन्दी )। आर्यामयं निश्चलदासकृतवृत्तिप्रभाकरं च संस्कृतभाषायां पद्यैरवातीतरत् । अथैकदा दयानन्दः काश्यामागत्यावृतत् । तांस्तांश्च तदीयान्प्रच्छन्नम्लेच्छवादाञ्जनमुखेभ्य: श्रावं श्रावमयं बहिर्विहारार्थं विनिर्गत: कस्मिँश्चिदुद्याने दयानन्देन दृष्टो 'ऽयमेवासा वित्यजानता च 'प्रतारयिष्यामी'तित्यभिप्रयता च दापितासन: समुपाविशत्, अन्येऽपि चैतत्सहचरा: । ततोऽन्यबुद्ध्या प्रतारयितुं प्रलाल प्यमाने कुहनाकाषायेऽयं शास्त्रीयं शस्त्राशस्त्रि किमपि तथा प्राचीवृत,- द्यथा स कुहक: क्षणमात्रं 'कोऽयमापतित: खलु मत्पा(१)खण्डतम:- खण्डनप्रचण्डमार्तण्ड' इति सविलक्षं चिन्तयित्वा यदैतदीयसारस्वतप्रवाहस्य प्रतिरोधे न किञ्चिदपि शास्त्रीयमध्यगच्छ,त्तदाऽवोचदार्यायाऽऽर्यां स्तटस्थान्—"भवन्तस्तु वदन्तु किमेतैरिदमुक्तम्, भवन्त: संस्कृतं न जानन्तीति कृत्वा युष्माकं पुरस्तादेतावदेते व्यर्थमुद्घोषितम्' इति । तां तु तस्य मायां दृष्ट्वा विहस्यार्ययैव तेषां सर्वेषां प्रबोधनार्थं मोहनलालएकैकं मायाभिक्षोर्मतमखण्डयत् ; यद्यच्च किञ्चिद्धौत्यं वचोभि: प्रकटीकुरुते स्म स मायिक,स्तत्सर्वं सर्वेषां पुरो निरास्यत् । तदेवं सूर्यास्तमयसमयात्संप्रवृत्तेऽस्मिन्प्रच्छन्ननास्तिकमतखण्डने निशीयसमये च संपरिप्राप्ते प्रस्विन्नगात्रो मूकप्राय: कपटभिक्षु: प्राणपरित्राणस्य प्रकारान्तरमपश्यन्नचकथत्, 'भद्रं दिवसान्तरे पुनर्विचारं करिष्ये, अद्य समाप्यतामि'ति । तत्रस्थास्तु सर्वे लोका भृशं कपटकाषायमुपाहसन्नवदँश्च "किमद्य भवद्वक्तव्यमखण्डितं श्रीमता मोहनलालमहानुभावेनाऽवशिष्टं, यस्य कृतेपुनरायसिष्यति भवान्' इति । मोहनलालस्तु तं तथाभूतं दृष्ट्वा स्वयमेव तस्यापमानेन खिन्नइवावोचत्—"अहो भवन्, भव-

(१) पाखण्डशब्दं धर्ममात्रवचनं केचिदाहुः । वयं पुनर्मत्सरादिपदवदस्य धर्मिधर्मोभयाभिधायितां मन्यामहे ।

तः सनातनवैदिकधर्मविलोपवादानाकर्ण्य यत्किंचिद्धभसाद्धिनिर्गतं मन्मुखात्, तत्खल्वेतेषां धर्मसंशयापनोदनायैव नत्वन्योद्देशेन । तन्माभूद्भूयोऽपि वो मुखाद्धर्मावधीरणेत्युक्त्वा सर्वैः सभ्यैः सह तत उदचलत् । मध्येमार्गं चाथ तैः रङ्गप्रेक्षकैर्धर्मसंशयविनिर्मुक्तचित्तैः सुप्रसन्नैः सबहुमानं प्रार्थितः—“अयि श्रीमन्, इदं पाखण्डमतखण्डनसर्वस्वं भवान्प्रज्ञया संकलय्य संप्रकाशयेच्चेत्पुस्तकमेकं, सर्वथा सनातनधर्मः पुनरुज्जीवितस्स्यादि”ति । एवमेव भविष्यतीति चोक्त्वाऽयं व्यसर्जयत्तान् । भूयोऽपि च यदाऽश्रौषीदयं कपटभिक्षोरनभिज्ञजनताप्रतारणावादाँस्तदाऽयमकरोच्चेतसि—“अद्य श्वो भारतभुवि भूरयो व्यक्ताश्चाव्यक्ताश्च पिचण्डभाण्डभरणार्थिनः सनातनधर्ममुन्मूलयितुं सन्ति प्रवृत्ताः । तदेते कुक्षिम्भरयो निर्लज्जा निर्मर्यादाश्च यद्यपि शतकृत्वोऽपि पराजीयेरँस्तथापि न निवर्त्स्यन्ति, कथंकारं वा निवर्तेरँस्तेवराकाः, नो खल्ववकल्पते नाम ह्यन्यथाकारमनायासरमणीयं पिचण्डकुण्डिकाऽऽवपनं पूर्वार्जितदुष्कृतभस्मकघस्मरतया विस्मरतां स्वकीयकर्त्तव्यतामकिञ्चित्कराणामकिञ्चिनानामीदृग्जनानाम् ; तथाप्यनभिज्ञानामार्यजनानां मा भून्महामोहेनानार्यतेत्यावश्यकं पुनः पाखण्डमतखण्डनग्रन्थग्रन्थनम्” इति । आकलय्य चैत्रं निरमिमीत निबन्धमनभिज्ञजनमहामोहविद्रावणन्नाम(१) । अथायमेकदा आमयावी संवृत्तः पक्षमाचमिवा, तिमाचं विरक्तचेताश्च लौकिककृत्येषु सशोकं तत्तच्चिन्तयन् अनु-

(१) यदेतत्तावदार्यभाषया रूपकरूपेणावतार्याऽऽभाणकादिनोपबृंहितं निरूपितमास्ते श्रीमता विजयानन्दपण्डितेन महामोहविद्रावणमेव नामतो, वस्तुतश्च यत्र खलु सा वैदिकधर्म्मशर्म्मोदयरूपाऽऽर्यमहोदयमहोत्सवमाकलय्याऽऽर्य्यभाषा कमनीयसुप्रसन्नभास्वरस्वरूपा स्मितोन्मुखी नरीनर्त्ति च मञ्जुलमञ्जुलैः पदन्यासैः, गूढार्थभावाविष्कारैः सहृदयहृदयेषु वर्षति च चमत्कारसारं, परोक्षमपि वस्तु समक्षमिव कुर्वतो साधारणजनानप्यऽवर्जयन्त्याऽऽवर्जयति च, जयति च सर्वथा प्रौढिमोद्गारिमनोहारिभिः सर्वैरेवाङ्गैः ॥

ल्लाघएव स्वानुभवोद्रेकं नाम जग्रन्थ ग्रन्थम्। अहो महात्मनां क्लेशोऽप्यवकल्पतउपकृतयएव लोकानाम्। ननु शोकोऽपि परमर्षेभगवतो वल्मीकजन्मनः सुरगणस्येव(१) प्रतिपेदे श्लोकतां, सकलजगद्रसोल्लासैकहेतोर्महेश्वरशिरःसत्कृतस्य विशङ्कटविकटमीमांसानक्रचक्राक्रान्ताऽपाराम्नायपयःपारावारसारायमाणरामायणसुधादीधितेश्च निदानताञ्चेति तस्यैव निदर्शनभूतमिवास्याप्येतदालोकयामः।

अथैकदा संस्कृतविद्यारसिकशिरोमणिर्भूयस्तदुज्जीवनजीवातुसमीहितो वाराणसेयसाम्राजसंस्कृतविद्यामन्दिराध्यक्षः श्रीमान् G. Thibaut, Ph. D. महोदयः शास्त्रिवर्यं ब्रवीति स्म प्रसक्तानुप्रसक्त्या—"अद्यत्वे खलु प्रायोऽन्यादृशमेव किञ्चित्पाण्डित्यमालोक्यते। भूम्ना हि भारतरत्नाकरः पुरस्तात्तैस्तैस्तादृग्भिर्दर्शनचिरत्नमहारत्नैः प्रतिभाप्रभाभास्वरस्वरूपैरसमानतदभिमानोन्नतचित्तवित्तानां सुसमृद्धबुद्धिविभवानामभिरूपमूर्द्धाभिषिक्तार्याणां शिरोधार्यैरहार्यैर्बोभाति स्म यथा, न तथा खल्वितरैः। तेषां तावदेतेषां भारतवैदुष्यसर्वस्वभूतानां दार्शनिकप्रबन्धचिरत्नरत्नानां खण्डनादीनामध्ययनाध्यापनादि त्वतिविरलायितमास्ते। अमुष्य च वैरल्यस्याग्रेसरं हेतुं विभावयामस्तदहं पुस्तकवैरल्यम्। तदेवंजातीयकानां ग्रन्थानां सुसंस्कृचिमाङ्कितसटीकसोपवृत्तिक(२)पुस्तकैर्वैपुल्ये सति संपाद्यमाने, संभाव्यते भूयस्तत्समुज्जीवनम्। पुस्तकवैपुल्यं च मुद्रणामन्तरा न खलु सौकर्येण सम्भवीति सर्वथैतेषां मुद्रणां

(१) कदाऽपि त्रैलोक्यं दौर्वाससशापोपहतं निःश्रीकमसारञ्च संवृत्तमिति तदा महेन्द्रादयो देवास्तापोपहता भूयो जगत्सत्त्वाऽऽप्यायनं संपिपादयिषवो भगवता विश्वम्भरेण ते स्म समुद्रं मन्थितुं प्रवर्त्तिताः। निर्वृत्ते च तस्मिन्नारम्भे चन्द्रः समुदपादीत्यादिस्तत्कीर्त्तिकथेतिहासोऽनुसन्धीयताम्।

(२) उपवृत्तिष्टिप्पणीनाम।

युक्तरूपामुत्पश्यामो, वक्ष्यामश्च । कश्चेतरो वा भारमेवंरूपमुद्वोढुमर्हेदीशीत वा, यो न भवति खलु भवादृशः" । शास्त्रिवर्यो ऽपि तदाकर्णय,न्नध्यक्षप्रभोस्तं तादृशं शास्त्रसमुज्जीवनसमुत्साहमाकलय्य हृदैव श्लाघंश्लाघं सुस्मेरमेवमाह स्म—"सत्यमिदमेवम्; तदात्वे तावत्ते विचक्षणसार्वभौमाः प्रायो मातृभिर्लालनपालनावसरेषु 'अयं चन्द्रमाः, अयं सूर्यः, इमे ग्रहाः, एते सप्तर्षयः, एतास्तारकाः' इतीत्थं शैशवेष्वेव ज्योतींषि परिचापिताः पुनः पितृभिः परमसौकर्येण तद्विद्यामलम्भिषत; व्याकरणं च बाल्येष्वेव सँस्कृतभाषाशिक्षणेषु तां सञ्चिस्कीर्षुभिस्तैस्तावदध्यापयिषतैषत्कर्यचर्यया । अथ ते प्रज्ञाप्रौढिमसु यथायथं दर्शनान्यध्यगीषताऽध्यजीगपँश्च विद्वद्वृन्दारकाः । यदाह च भवान्, भवितुमर्हति तत्तथा । तच्च यावदस्मास्वायतते न खलु तावद्वक्तव्यमपद्यते । नन्वस्माकं मोहनलालवेदान्ताचार्यः खण्डनं पाठयत्येवाऽविरतं प्रायो, द्विचान्सुमेधसश्छात्त्रान् । तन्मदुक्तः स खण्डनं तु शीघ्रमेव तावन्मुद्रणां लम्भयिष्यति । नात्र दुर्घटमिवास्ति किञ्चित् । परं परस्ताद्द्रष्टव्यं परम्" इति ॥

अथ कदाचिन्मोहनलालं खण्डनखण्डखाद्यमध्यापयन्तमाकर्ण्य कश्चिद् द्वेषदूषितधिषणं धिषणम्मन्यमना मनागपशब्दयागादीत्—"अहो जन्मतः पठतः पठतोऽपि मम खण्डनं नायातम्, कथमसावध्यापयेत्, हन्त प्रथमतो बुद्ध्यतां तु खण्डनं, चरमतोऽध्याप्यताम्" इति । तदेतत्कर्णाकर्णिचाकर्ण्य शास्त्रिवर्यो मोहनलालमाकार्याऽब्रवीत्—'भवान् सुपरिष्कृत्य सटीकं सोपवृत्तिकं खण्डनं प्रकाशयत्वि'ति। तदाऽसावपि च सशाङ्करव्याख्यं तत् स्वकृतया गर्त्तप्रदर्शिन्या प्रदर्शितपद्धति सुपरिष्कृत्याङ्कनां प्रापयितुमारभततराम् । तदेवं प्रत्यक्षखण्डनं यावद्गर्त्तप्रदर्शिनीं निर्माय परिष्कृत्याङ्कनां गमयित्वा च

खण्डनखाद्यं, विघ्नबहुलतया शुभकार्यस्या,ऽसारतया च संसारस्या,ऽनित्यतया च शरीरस्य, साधुपुरुषचिरस्थास्नुत्वाऽसहिष्णुतया च कलेः, सतां चेतस्सु च शोकशङ्कुं कीलयन्निव, चक्षुष्षु च प्रणालकबन्धुतां बध्नन्निव, मुखेषु च हाकष्टानर्थधिक्शब्दपारम्परीं पल्लवयन्निव, गीर्वाणगुरुणा सह सम्भाषितुमिव, विशिष्टाद्वैत-शुद्धाद्वैत,केवलाद्वैत,शुद्धद्वैताद्यौपनिषदोपनिष्करेष्वच भवन्तः कतमं परिशीलयन्तीति सनकादीन्परिप्रष्टुमिव, प्रजापतिं द्रष्टुमिव, मन्दाकिन्यामुपस्प्रष्टुमिवो,द्भूस्त्रष्टः सत्त्वविशालता कियतीति परिच्छेत्तुमिव च भूलोकमजहात् । कीर्त्तिमूर्त्त्या तु पुनरद्यापि विद्यतएव । सुश्लोका हि लोका दुर्गन्धमलीमसपरिच्छिन्नक्षणभङ्गुरबीभत्सशरीरकं जहतोऽपि सुरभिविभ्राजिष्णुविशालशाश्वतिकस्पृहणीयकीर्त्तिकलेवरप्रकाशडैर्वरीवृत्यन्तएव खल्वजस्रं जगत्याम् ॥

तदेतावत्तावज्ज्यरूपयमिदमादर्शयितुमस्मद्भारतीयभ्रातॄन्, यथाऽद्यापि यशस्विनी सनाथा धन्या च भवति यशस्करैर्भाग्यशालिभिर्महानुभावरत्नैरेवंविधैः ; पर, कलिकालकरालकटाक्षच्छविक्षेपैर्न चिरराचाय तु पुनः प्रतितिष्ठति पुचवतीयं तैरिति हन्त प्रसादविषादयोः समं समुपनिपातइत्यहो विधिसंविधानमिति ॥

| | |
|---|---|
| १९४४तमवैक्रमाब्दे<br>माघशुक्लपञ्चमी | भारतधुरन्धराणां कनीयान् भ्राता<br>यः कश्चित्<br>रा० भागवताचार्यः । |

( श्रीशः )

( ॐ नमो भगवद्भ्यः श्रीभाष्यकारचरणेभ्यः )

# अनिर्वचनीयतावाद-विज्ञानस्वप्रकाशता-वाद-स्वरूपदिक्प्रदर्शनम् ॥



इहास्ति खलु विज्ञानविज्ञेयात्मकतया प्रथमाने जगति विज्ञानं सत्, तदितरत्त्वसत् । अनिर्वचनीयं हि नभोनभस्वदादिरूपमेतद्विज्ञेयं न तावत्सदस्तीति शक्यते वक्तुम्, तथाहि—"लक्षणप्रमाणाभ्यां वस्तुसिद्धि"रिति हि प्रमेयसत्तावादिनां वादाहवदुन्दुभिध्वानः । न च लक्षणानि दूषणचक्रनक्रमुखेभ्यः शक्नुवन्ति निस्तरीतुम् । लक्षणानां चैवंगतौ 'लक्षणाधीना लक्ष्यव्यवस्थिति'रिति सुदूरनिरस्ता तपस्विनी लक्ष्यव्यवस्थितेरात्मलाभप्रत्याशा । प्रमाणेषु च विपुलं वादिनां विविध-विप्रतिपत्तिसद्भावादवतरति लक्षणापेक्षेति परीक्षायां तेषां स्वयमपि लक्ष्यतया न नाम लब्धपदत्वं । प्रमाणाधीनश्च प्रमेयाङ्गीकारइति कुतस्तरां प्रमेयाणां सिद्धिः ।

नन्वेतेषां पदार्थानां लोकसिद्धत्वादेवाङ्गीक्रियतां सत्त्वं, कमनया विडम्बनयेति चेत्, लोकसिद्धत्वादेवाङ्गीकारे युष्माकमपि परस्परं विप्रतिपत्तेरनवकाशः । किञ्च, 'लोकसिद्धत्वादि'ति ताव-न्निरूपणमर्हति । किन्नाम लोकसिद्धत्वं, सत्त्वेन प्रतीयमानत्व,माहोस्वि-त्सत्त्वेन प्रमाणसिद्धत्वम् । तत्राद्ये, मरुमरीचिकोदकादिकानां सत्त्वस्य को वा वारयिता स्यात् । ननु सर्वैस्तथाप्रतीयमानत्वमुच्यते, न च मरुमरीचिकोदकादीनां सर्वः प्रत्येति तथात्व,मपि तु कश्चि-

देवेति चे,न्न हि भो घटादिकमपि सर्वः प्रत्येति। अथोच्येता,स्ति तत्र सर्वेषां तथाप्रत्ययस्य स्वरूपयोग्यता, न तु मरीचिकादाविति चे,-न्निरुच्यतां सा योग्यता, कथंकारं चाधिगता तवेत्यादिपर्यनुयोग-परम्परान्न खलु विस्मययितुं पारयिष्यसि। किञ्चै,वं सति शरीरात्म-तादात्म्याङ्गीकारिभिर्लौकायतिकैरेवोर्जितं जितं, हंहोआस्तिक्यं साधु संरचितं धीधनैः। अयि भोः, पश्चाद्बाध्यतया तत्तया नाङ्गीक्रियत इति चे,त्तर्हि एतेषान्न खलु पश्चात्तनबाधबाध्यतेत्यत्रार्थे कस्ते देशिकः।

अथास्तु द्वितीयइति चेत् (सत्त्वेन प्रमाणसिद्धत्वं), तद्धि परीक्षामधिकरोति। न हि परीक्षामन्तरा सत्त्वेन वाऽसत्त्वेन वा प्रमाणतः सिद्धाइति संभवति परिच्छित्तिः। नचैते प्रमेयाः सन्ति विज्ञानमिव स्वप्रकाशाः, येन न स्यात्साधकापेक्षा।

---

## (विज्ञानस्वप्रकाशतावादः)

यभातून,

विज्ञानं हि स्वप्रकाशं स्वतःसिद्धस्वरूपम्। तद्धि नो परतः सेद्धुमर्हति। तथाहि, 'यत्र यत्र हि जिज्ञासितस्य(१) संशयविपर्य-ययोर्व्यतिरिक्तप्रमायाश्च यावदभावकूटं वर्त्तते, तत्र तत्र जिज्ञासित-तस्याप्रमितत्त्वमि'त्ययं नियमस्तावद्विश्वसतावादिनैव निर्धारितः। जाग्रति च विज्ञाने न तावत्कस्य चिदपि कदा चिदपि 'जानामि, न वे'त्याकारकः संशयो, न वा विपर्ययो 'न जानामी'त्याकारकः

(१) यद्यपीच्छायाअसिद्धवस्तुविषयकत्वस्वाभाव्यप्रतिनियमेन जानीयामित्येवं स्वप्रकाशस्वरूपे भाने न तावत्प्रभवत्यवतरीतुंञ्जिज्ञासेति जिज्ञासास्वप्रकाशतयोः परस्पर-रपरत्यर्थिस्वरूपतया न संघटते जिज्ञासया लिङ्गभेदनं, तथापि न खलु स्वप्रकाशतायाः-लैङ्गिकभानगोचरत्वमत्राभिप्रेयते, तथा सति हि परिपन्थिनी परप्रकाशतै-रूढपदेति व्याप्त्युपदर्शनएव तात्पर्यं विभावनीयम्।

न जानामीत्याकारा नि.ज्ञानव्यतिरेकावगाहिनी प्रमा तु वराकी दूरापास्ता । तत्सद्भावे तदभावावगाहिग्रहस्य भ्रमत्वनियतेः । विज्ञानमस्वप्रकाशं चेदभविष्य,त्तर्हि विज्ञाने सत्यपि जिज्ञासायां सत्यां ज्ञानाभावविषयकं ज्ञानं संशयो वा विपर्ययो वा व्यतिरेकप्रमैव वा निरर्गलमभविष्यत्, 'यत्र यत्र हि प्रमितत्वाभाव,-स्तत्र तत्र सत्यां जिज्ञासायां प्रमितत्वाभावावगाहिज्ञानं जायते' इतिप्रतिनियमात् । तदित्थं विज्ञानस्य परानपेक्षप्रमितत्वमेव स्वतःसिद्धत्वस्वप्रकाशत्वादिपदव्यपदेशभाक् ।

व्यवसायानन्तरमनुव्यवसायो भवतीति न व्यवसाये संशयादिरिति चे,द्यत्रैव गत्वा ज्ञानस्य ज्ञानं नाभ्युपगंस्यते, तत्र तज्ज्ञानव्यक्तेः संशयादिर्दुर्वारइति प्राथमिकविज्ञानविषयपर्यन्तविशयादिः च लब्धा. त व्यवहारोच्छेदएव पर्यवस्यति । विषयिसंशयाद्धैर्विषयचैवंगतौ 'नकताध्रौव्यात् । अथ व्यवसायानुव्यवसायतदनुव्यवलद्व्यवग्हिनुव्यवसायपारम्पर्य्येऽविश्रान्तैव मंस्यत इति चे,त्तर्हि यत्किञ्चिदेकमात्रविषयविषयकविज्ञानानुविज्ञानधारायाअविच्छिन्नप्रवाहतया जन्मशतकेनाऽपि विषयान्तरसञ्चारो दुर्लभआपद्येता,ऽऽपद्येरँश्च मूर्च्छासुषुप्तिमरणमोक्षाः शशविषाणायिताः । मूर्च्छादौ हि तत्तद्विषयावगाहियावज्ज्ञानाभावः सर्ववादिसंप्रतिपन्नः । न चैतज्ज्ञानधारायाः संततत्वे संघटते । ननु ज्ञानप्रामाण्यसंशयाधीनः संशयस्तवाऽपि (वैज्ञानिकस्य) विषयपर्यन्तो निरर्गलएवेति चेन्नैतत्; ज्ञानस्वप्रकाशतानये हि मानमेयभावव्यवस्थायाअभावादेव तदाश्रया दोषाः सन्ति निरवकाशाः । यदि तु भेदेन विषयविषयिभावो भवे,त्तर्हि ज्ञानस्वरूपमेव न सिद्ध्येत् । विज्ञानस्य परत्र च [illegible]जकत्वे ह्यापतति पूर्वोपदर्शितविधया मूलक्षयकरीखल्वन-

वस्थादुरवस्था। अथोच्येत, अवश्यज्ञेयतां ज्ञानस्य नाभ्युपेमः, स्वार्थसंव्यवहारस्तु ज्ञानस्य स्वरूपसत्तयैव निर्वक्ष्यतीति ब्रूमहइति, न तदपि विचारचारु, यतः स्वरूपसत्तायां प्रमाणाप्रवृत्तौ स्वरूपसत्तेत्येव कुतः समायातम्, येन व्यवहारः समासादयेदात्मानम्। कुतोऽध्यवसितमिदं सती सा वित्तिरिति, असत्येव कुतो न स्यात्। तदिदमुच्यते "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यती"ति।

घटपटादेः सत्तां व्यवहरन्हि प्रामाणिकस्तत्र प्रमाणसद्भावं वक्तुमर्हति, न हि प्रमाणमनुपन्यस्य परीक्षकेण तत्सत्ता शक्यतेऽङ्गीकर्तुम्। प्रमाणमव्यापारयतो वाङ्मात्रेण चेद्वस्तुसद्भावः सिध्येत्, तर्हि नास्तितावाङ्मयमात्रेणाऽसद्भावएव किमिति न स्यात्। तदवश्यं तेन घटसत्तायां व्यवस्थाप्यायां व्यवस्थापकप्रमाणसत्तोपन्यास्या। सापि च प्रमेयसत्तान्यायेन स्वावगाहिप्रमाणसत्तामपेक्षते। यदि हि प्रमाणसत्तान्तरमन्तरेणैव तत्प्रमाणसत्तां परोऽङ्गीकुर्याद्धन्त तर्हि प्रथमतएव विनैव प्रमाणसत्तया घटसत्तामेव किमितिनाङ्गीकरोति 'अन्ते रण्डाविवाहश्चेदादावेव कुतो नही'ति न्यायात्। तत्रास्ति चेत्प्रमाणसत्तान्तर,न्तर्हि तत्राऽप्येवं, ततउत्तरत्राप्येवमेवेत्यनवस्थाडाकिनी न मुञ्चति पृष्ठम्। अथ नास्ति तत्र यत्किञ्चित्प्रमाणसद्भाव,स्तर्हि प्राथमिकी प्रमाणसत्तैव नात्मानमासादयति, कुतस्तरां तु वराकी प्रमेयसत्ता। अन्यथा कस्कः शशविषाणादिर्न सिध्येत्। तदित्थं तत्र यस्य कस्य चिदपि प्रमाणस्याऽप्रवृत्तौ प्रथमप्रमाणसत्ताया असद्भावः समायाति, यावत्प्रमाणसत्ताविनिवृत्तिर्हि स्वप्रमेयविनिवृत्तिप्रतिनियता खलु भवति। प्रमाणस्य चासद्भावे तदुच्छिष्टपुष्टस्य तस्य तस्य खलु विषयसत्त्वस्य सदूरपराहतो नामात्मलाभः। अथोच्येत, न तावदव्यवहितपूर्वापरवित्तितद्वित्तिपारम्परीमभ्युपगच्छामः, ( येन व्यवहारानि-

ऽत्यापत्तिरियं स्यात्) किन्तु यदा कदाचित्कयाचिद्वित्तिव्यक्त्या कादाचित्की काचिद्वित्तिव्यक्तिः प्रमीयते इति । इत्थं च सर्वाऽपि वित्तिः प्रमाणसिद्धैव भवतीति चे,त्स्यात् खल्विदं तदा, यदि नाम 'अयं घटः' 'घटमहं जानामी'त्यतोऽधिका का चित्कदाचिद्वित्तिरस्मदादेरुत्पद्यमानानुभूयेत, या स्याद्घटवित्तितद्वित्तितद्वित्तिवित्तिप्रवाहं गोचरयन्ती तादृग्विषयशतभारोद्वहनमन्थरा । अथ मन्येताऽस्मदादेरेतज्जन्मावच्छेदेनैवंविधा वित्तिरभवन्त्यपि योगिप्रभृतिविलक्षणजन्मावच्छेदेन स्यादिति संभवतीति, तर्हि यस्या वित्तेस्तावद्विषयगर्भिता धीर्विषयः, साऽप्यन्यया कयाचिद्वित्तिव्यक्त्या क्रोडीकरणीयेत्यमुष्मिन्नर्थे प्रमाणाभावो नाम, न नाम च तथा सति संभवति मोक्षः । उपदर्शितमुद्रया हि वित्तितद्वित्तिधाराप्रवाहप्रवृत्तौ कथंकारं यावद्विशेषगुणोच्छेदलक्षणो मोक्षः स्याल्लब्धपदः । नापि च स्वात्मना सह तं तादृग्वित्तिप्रवाहं काचिद्वित्तिव्यक्तिरवगाढुमीष्टे, तथा भावे तत्रैव स्वप्रकाशता पदं निदधाति । निदधात्विति चेद्धन्त भोः, एतावद्धि भवतः प्रयासजातं जातमरण्यरुदितं नाम, प्रथमतएवास्माभिरुपदिष्टं तत्कुतो नाङ्गीकृतम् । एतेन 'अन्योन्यवित्तिगोचराऽन्योन्यवर्तिरि'त्यपि निरस्तम् । चरमा हि वित्तिव्यक्तिः स्वावगाहिनीमुपान्त्यां वित्तिव्यक्तिं गोचरयन्ती स्वात्मानं विषयीकुर्यादेव । एवमेवोपान्त्या वित्तिव्यक्तिरन्तिमां स्वावगाहिनीं विषयीकुर्वती स्वात्मानमपि गोचरयेदेवेति सविषयकान्योन्यग्रहे स्वप्रकाशतापत्तिः । ननु चरमा वत्तिव्यक्तिः पुरुषान्तरेण प्रमास्यते इत्यस्त्येव सा प्रमितेति न तावत्तदभावः सेद्धुमर्हतीति चेत्त,न्नापि प्रमाणविशेषस्य त्वया दातुमशक्यतया कुतस्तदस्तितासिद्धिः । तद्दाने वा भूयो भूयः प्रमाणपरम्पराप्रधावनमित्यावेदितैवानवस्था । ननु ज्ञानसिद्ध्यन्यथानु-

